॥ ६८ ॥ ६९ ॥ विष्णुपदाः गङ्गाया परि उपरि जात इति पारिजात स्वार्थेऽण्। सयोगे मन्तु मानयितु वियोगे दारयितु च योग्यानि मन्दाराणि च तानि पुष्पाणि च ते ॥ ७० ॥ कोविदार इत्यधिकारात् ॥ ७१ ॥ ७२ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि टीकायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अष्टषष्टितमेऽध्यायेऽमुष्मिन्ना रदसंनिधौ ॥ पारिजातसमाहृत्यै प्रतिज्ञा हरिणा कृता ॥ १ ॥ एव तावत्पूर्वाध्याये "निमन्त्रितोऽस्य पूर्वेषु पुष्प दत्त्वा महामते ।" इति नारदवचः श्रुत्वा तस्य च स्वकार्यो पयोगित्वाद्भगवान्नारदम् उवाचेत्याह—ततो जिगमिषुमिति ॥१॥ अथ नारदेन पूर्वं स्वप्रयोजनमुक्तम् । "निमन्त्रितोऽस्य पूर्वेषु पुष्प दत्त्वा महामते ।" इति तत्कुर्वन्नेव ममापि

निष्क्रयेण मया मुक्त कश्यपस्तु तपोधनः ॥ इन्द्रो दत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम ॥ ६८ ॥ सोमश्चाप्यथ रोहिण्या ऋद्ध्या च धनद स्तथा ॥ एव सौभाग्यदो वृक्ष पारिजातो न सशय ॥ ६९ ॥ पारि जातो विष्णुपद्या पारिजातेतिशब्दित ॥ मन्दारपुष्पैर्युक्तो मन्दारस्तेन कथ्यते ॥ ७० ॥ कोऽप्ययं दारुरित्याहुरजानन्तो यतो जना ॥ कोविदार इति ख्यातस्तत स सुमहातरु ॥ ७१ ॥ मन्दार कोविदारश्च पारि जातश्च नामभि ॥ स वृक्षो ज्ञायते दिव्यो यस्यैतत्कुसुमोत्तमम् ॥ ७२॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे सप्तषष्टि तमोऽध्याय ॥ ६७ ॥ ॥ छ ॥ ॥ वैशम्पायन उवाच ॥ ततो जिगमिषु तत्र नारद मुनिसत्तमम् ॥ प्रोवाच भगवान्विष्णुरप्रमेयपराक्रम ॥१॥ महर्षे धर्मतत्त्वज्ञ स्वर्गं गत्वा त्वयाऽनघ ॥ द्रष्टा सदस्यान्वेषस्य त्रिपुरघ्नस्य धीमत ॥ २ ॥ अनाज्ञया मद्वचनाद्विज्ञाप्य पाकशासन ॥ सभा षयित्वा प्रावृत्य पौराण वेत्सि यन्मुने ॥ ३ ॥ यमसाक्षीन्मुनिश्रेष्ठो भगवान्कश्यपस्तरुम् ॥ पारिजात पुराऽदित्याः सुखार्थं धर्मसत्तम ॥ ४ ॥ स पुण्यमतिसौभाग्य ददाति तरुसत्तम ॥ तव दत्त पुरा दान व्रतेन तरुमुत्तमम् ॥ ५ ॥ देवीभिर्धर्मनित्याभिर्धर्मार्थममगेत्तम ॥ दत्तं श्रुत्वाऽ भिकाङ्क्षन्ति दातु पत्न्यो मम प्रभो ॥ ६ ॥ पुण्यार्थं दानधर्मार्थं मम प्रीत्यर्थमेव च ॥ आनाययद्वा स्वर्गात् पारिजात महाद्रुमम् ॥ ७ ॥ दत्ते दाने पुन स्वर्गं तरु त्व नेतुमर्हसि॥ स याच्य एव भगवान्बलभिद्भगवस्त्वया ॥८॥ तथा तथा प्रयत्नश्च कार्योऽस्मिन्मुनिसत्तम॥ यथा तरुवर दद्यात्पारिजातं सुरेश्वर ॥ ९ ॥ तत्र दूतगुण तावत्पश्यामस्ते तपोधन ॥ समाप्त्या सर्वकृत्यानां सपद्धि त्वयि मे मता॥ १० ॥

कार्यं कुर्विति भगवान्नारदमाह—महर्षे इति ॥ २ ॥ अनाज्ञया श्रेष्ठस्य भृत्य प्रति यत्प्रेरणरूप वचनं सदाज्ञा तया विनेत्यर्थ । विज्ञापना उत्तमस्य निकृष्टेन प्रार्थनेति भेदः । पौराणं याम्नाक्वारीयम्॥ ३ ॥४॥ स दत्त सन्निति शेष । तव इन्द्रस्य सभा धर्म तरु देवीभि पूर्वोक्ताभिरवित्यादिभिनारदाय दत्तम्। नारदेन च पुनस्तुभ्य दत्तमिति श्लोकद्वय स्य सबन्ध ॥ ५ ॥६॥ आनायय भृत्यै ॥७॥ पूर्वोक्तमर्थ स्पष्टीकरोति—दत्ते दान इति॥ अस्माक दानफल भविष्यति तव तु काऽपि हानिर्नास्तीत्यर्थ ॥८॥९॥१०॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ शच्याः क्रीडावृक्ष इति मिषेण मोक्षितः मोचितः । शच्या इति छेदः संधिरार्षः । ततो रुद्रात् ॥ १७ ॥ उमया उमायाः ॥ १८ ॥ १९ ॥ २० ॥ देवौ देवी देवश्चेति द्वन्द्वैकशेषः । तौ मां च वर्जयित्वेति संबन्धः ॥ २१ ॥ २२ ॥ गणाः सङ्घाः प्रवराणां प्रमथानाम् ॥ २३ ॥ २४ ॥ सोमम्

एवं नारायणेनोक्तो नारदो भगवानृषिः ॥ प्रहस्योवाच केशिघ्नमिदं वाक्यं तपोधनः ॥ ११ ॥ बाढमेवं प्रवक्ष्यामि यदुमुख्य सुरेश्वर ॥ न तु दास्यति देवेन्द्रः पारिजातं कथंचन ॥ १२ ॥ मन्दरं पर्वतश्रेष्ठं दानवैस्त्रिदशैस्तथा ॥ निक्षिप्य तोयधौ पूर्वं पारिजातः समाहृतः ॥ १३ ॥ मन्दरात्पर्वतश्रेष्ठान्नयितुं प्रेषितः पुरा ॥ पारिजातं हरेणापि लोककर्त्रा जनार्दन ॥ १४ ॥ स्वयं विज्ञापितो गत्वा ततः शक्रेण शंकरः ॥ आक्रीडद्रुमं उद्याने शच्याः स्यादिति याचितः ॥ १५ ॥ तथाऽस्त्विति वरो दत्तो महादेवेन चानघ ॥ न च नीतः पारिजातो मन्दरं चित्रकन्दरम् ॥ १६ ॥ क्रीडावृक्षः स शच्येति व्यपदेशेन मोक्षितः ॥ महेन्द्रेण महाबाहो पारिजातस्ततः पुरा ॥ १७ ॥ प्रियार्थमुमया साक्षात्पारिजातवनं हरः ॥ गव्यूतिशतविस्तीर्णं मन्दरस्यैव कन्दरम् ॥ १८ ॥ न तत्र सूर्यभाः कृष्ण प्रविशन्ति नगोत्तमे ॥ न च चन्द्रप्रभा शीता नैव कृष्ण सदागतिः ॥ १९ ॥ शीतोष्णे छन्दतस्तत्र शैलपुत्र्या भवन्ति हि ॥ स्वयंप्रभं वनं तद्धि महादेवस्य तेजसा ॥ २० ॥ वर्जयित्वा महादेवौ सगणौ यदुनन्दन ॥ मां चान्यस्तद्वनं दिव्यं न प्रयाति कथंचन ॥ २१ ॥ स्रवन्ति तत्र वार्ष्णेय पारिजाताः समन्ततः ॥ सर्वरत्नानि मुख्यानि मनसा काङ्क्षितानि वै ॥ २२ ॥ गणास्तान्युपभुञ्जन्ति प्रवराणां महात्मनाम् ॥ आज्ञया देवदेवस्य लोकनाथस्य केशव ॥ २३ ॥ पारिजाताद्बहुगुणं फल तेषां तथा वनम् ॥ अभिमानं प्रभाश्चैव गुणा भूरिगुणास्तथा ॥ २४ ॥ मूर्तिमन्तश्च ते वृक्षाः सोमं देवं वृषध्वजम् ॥ उपतिष्ठन्ति सततं प्रवरैः सह केशव ॥ २५ ॥ रौद्रेण तेजसा जुष्टा दुःखैर्हीनाः सुखान्विताः ॥ तरवो मन्दरे ते हि दयिताः शैलकन्यया ॥ २६ ॥ प्रविवेशान्धको नाम घोरस्तत्र म[illegible]ः ॥ दैतेयो वरदानेन दर्पितः पापनिश्चयः ॥ २७ ॥ स हतो देवदेवेन हरेणामित्रघातिना ॥ अवध्यः सर्वभूतानां वृत्रादशगुणं बली ॥ [illegible] ॥ एवं दुःखं न ते देव पारिजातं प्रदास्यति ॥ पुष्कराक्ष सहस्राक्षः सत्यमेतद्ब्रवीमि ते ॥ २९ ॥ सततं सहितो देव्या शच्या स हि वरद्रुमः ॥ सर्वकामप्रदः कृष्ण तथेन्द्राय महौजसे ॥ ३० ॥ श्रीभगवानुवाच ॥ मुने तद्युज्यते साधु महादेवेन धीमता ॥ यच्छचीकारणं कृत्वा न नीतः स तरुः पुरा ॥ ३१ ॥

उमासहितम् ॥ २५ ॥ कन्यया कन्यायाः ॥ २६ ॥ वरदानेन सर्वत्र तव गतिरकुण्ठिताऽस्त्वित्येवंरूपेण ॥ २७ ॥ २८ ॥ दुःखं दुःखलभ्यम् ॥ २९ ॥ सहितो हितेनेष्टसुखदानेन युक्तः साहितः ॥ ३० ॥ ३१ ॥

पारावयस्य लोकमर्यादाया ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ विप्लवो भवेत्सर्वेऽप्यनृतवादिनो भविष्यन्तीत्यर्थ । कारणानुसारित्वात्कार्यस्य ॥३७॥३८॥३९॥
॥ ४०॥इति श्रीहरिवंशे विष्णुपर्वणि टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ ७ ॥ एकोनसप्ततितमेऽध्यायेऽस्मिन्कृष्णवाक्यश्रवात् ॥ पारिजात न दास्यामीत्याह शक्र
स ज्येष्ठ सर्वभूतानां लोककृत्प्रभवोऽव्यय ॥ पारावर्यस्य सदृश कृतवानिति मे मति ॥ ३२ ॥ अह यवीयान्देवस्य सर्वथा बलघातिन ॥
लालनीयश्च भगवञ्जय त इव सत्तम ॥ ३३ ॥ सर्वथा भगवांस्तावदुपायैर्बहुविस्तरै ॥ करोतु यत्न प्रीत्यर्थं शक्तो ह्यसि तपोधन ॥ ३४ ॥
मया मुने प्रतिज्ञात पुण्यार्थं सत्यभामया ॥ स्वर्गादिहानयिष्यामि पारिजातमिति प्रभो ॥ ३५ ॥ मया तदनृत कर्तुं कथ शक्य तपोधन ॥
नानृत हि वचो विप्र प्रोक्त पूर्वं मयाऽनघ ॥३६॥ मयि मग्नप्रतिज्ञे वै लोकानां विप्लवो भवेत् ॥ यन्मया हि मुनिश्रेष्ठ लोकधर्मा गुणान्विता ॥
परिवार्या स्थितो सर्वे स कथ ह्यनृतं वदेत् ॥ ३७ ॥ न देवगन्धर्वगणा न राक्षसा न चासुरा नैव च यक्षपन्नगा ॥ मम प्रतिज्ञामपहन्तुमुद्यता
मुने समर्था खलु भद्रमस्तु ते ॥ ३८ ॥ स पारिजात यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वर ॥ तत शचीव्यामृदितानुलेपने
गदां विमोक्ष्यामि पुरंदरोरसि ॥ ३९ ॥ इति प्रवाच्यो यदि सामपूर्वक प्रयाच्यमानो न तरु प्रयच्छति ॥ मुनिश्चय मद्गमनाय सर्वथा त्वयाऽपि
काय खलु तत्र निश्चय ॥ ४० ॥ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे नारदकृष्णभाषणं नामाष्टषष्टि
तमोऽध्याय ॥ ६८ ॥ ॥ ७ ॥ ॥ वैशम्पायन उवाच ॥ ॥ नारदोऽथ मुनिर्गत्वा महेन्द्रसदन प्रति ॥ तां रात्रिमवसत्तत्र ददृशे च महोत्स
वम् ॥ १ ॥ तत्रादित्या महात्मानो वसवश्च सुरोत्तमा ॥ राजर्षयश्च विद्वांस स्वर्गता कर्मभि शुभै ॥ २ ॥ नागा यक्षाश्च सिद्धाश्च चारणाश्च
तपोधना ॥ ब्रह्मर्षयश्च शतशो देवर्षिमनवस्तथा ॥ ३ ॥ सुपर्णाश्च महात्मानो मरुतश्च महाबला ॥ दिवौकसां निकायाश्च शतशोऽन्ये समागता
॥ ४ ॥ उपर्युपरि सर्वेषां सोमदेवो महेश्वर ॥ तस्यावमितविक्रान्त स्वैर्गणैः परिवारित ॥ ५ ॥ देवर्षिभिर्मुनिश्रेष्ठै सवृतः सर्वभावन ॥
कल्पान्तरसहस्रेषु क्षयो येषां न विद्यते ॥ ६ ॥ यानर्चयन्ति सततं देवा देवेश्वरोपमाः ॥ आत्मज्ञा नावलेपान्धा ये च धर्मपथि स्थिता ॥ ७ ॥
रुद्राश्च काश्यपा देवमभ्युपासन्त भारत ॥ स्कन्दश्च भगवानग्निर्गङ्गा च सरितां वरा ॥ ८ ॥ अर्चिष्मांस्तुम्बुरुश्चैव भारिश्च वदतां वर ॥ नतारो
देवदेवानामेते हि तपसाऽन्विता ॥ ९ ॥ एताननुविधीयन्ते सर्वदेवगणा नृप ॥ धर्मनित्यास्तपोनित्याः सतां मार्गमुपाश्रिता ॥ १० ॥
दर्शयिते ॥ १ ॥ नारदोऽथेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ नावलेपान्धा गर्वहीना ॥ ७ ॥ ८ ॥ भारिर्ग धर्वविशेष ॥ ९ ॥ अनुविधीयन्ते अनुसरन्ति ॥ १० ॥

तान् मानुषान् अर्चयन्ति दृष्टफलप्रदानेन पूजयन्ति ॥११॥ देवानां कृत्येषु ये वर्तन्ते ते इति च ज्ञेयम् । अनुष्ठिताः अनुष्ठितवन्तः ॥ १२ ॥ १३ ॥ षड्गुणान् वक्रिमस्नि ग्धमधुरलास्यविभक्तावबद्धाख्यान् ॥ १४ ॥ १५ ॥ जुजोष प्रीत्या जग्राह । उपस्थानं नृत्यादिरूपां परिचर्याम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्यैवार्तिहरणं

पितृकृत्येषु देवानां संन्यासं ये त्वनुष्ठिताः॥
ये त्विमे मानुषा देवानर्चयन्ति शुभार्थिनः ॥ तानर्चयन्ति ह्यमरास्तथा राजञ्छुभार्थिनः ॥ ११ ॥
स्वाध्यायवन्तः कौरव्य सदा नियमचारिणः ॥ १२ ॥ गन्धर्वाधिपतिः श्रीमांस्तत्र चित्ररथो नृप ॥ सपुत्रो वादयामास देववाद्यानि हृष्टवत्
॥१३॥ ऊर्णायुश्चित्रसेनश्च हाहा हूहूस्तथैव च ॥ डुम्बरस्तुम्बरुश्चैव जगुरन्ये च षड्गुणान् ॥१४॥ उर्वशी विप्रचित्तिश्च हेमा रम्भा च भारत ॥
हेमदन्ता घृताची च सहजन्या तथैव च ॥१५॥ जुजोष भगवान्देवस्तदुपस्थानमात्मवान् ॥ वृत्तेन तुष्टः शक्रस्य जगाम जगतो गतिः ॥१६॥
गते भूतपतौ सर्वे नृपा जग्मुर्यथागतम् ॥ महेन्द्रेणार्चिता देवाः स्वानेव निलयान्गताः ॥ १७ ॥ ततः सर्वेषु यातेषु सुखासीनं पुरंदरम् ॥ सदस्यैः
स्वैः सहासीनं नारदोऽभिययौ मुनिः ॥ १८ ॥ तमिन्द्रः पूजयामास समुत्थाय तपोधनम् ॥ दिदेश कुशगर्भं च पीठमात्मासनोपमम् ॥ १९ ॥
नारदोऽथ महातेजा महेन्द्रमिदमब्रवीत् ॥ दूतोऽहममरश्रेष्ठ विष्णोरतुलतेजसः ॥ २० ॥ किंचित्कार्यं पुरस्कृत्य प्रेषितोऽस्मि महात्मना ॥
आनर्तादार्तिहरणं तस्यैवानघतेजसः ॥ २१ ॥ प्रीतिवाक्यानि हृद्यानि प्रयुज्य मुनये तदा ॥ ततः प्रहृष्टो भगवानब्रवीत्पाकशासनः ॥ २२ ॥
किमाह पुरुषश्रेष्ठः शीघ्रमाचक्ष्व मे मुने ॥ चिरस्य खलु कृष्णेन संस्मृतोऽस्मि महात्मना ॥ २३ ॥ ॥ नारद उवाच ॥ ॥ महेन्द्रेन्द्रानुजं द्रष्टुं
गतोऽहं भ्रातरं तव ॥ कथंचिद्द्वारकां तत्र काश्यपानां यशस्करम् ॥ २४ ॥ तं तु रैवतकेऽद्राक्षं तदासीनमरिंदमम् ॥ रुक्मिण्या सहितं वीरं स्तु
वन्तं वृषभध्वजम् ॥ २५ ॥ पारिजाततरोः पुष्पं तस्य दत्तं मयाऽनघ ॥ विस्मापनार्थं देवेश पत्नीनामुरुतेजसः ॥ २६ ॥ त[illegible]स्य पत्न्यस्तु
विस्मयं परमं ययुः ॥ बहुकामप्रदं पुष्पं वृक्षराजसमुद्भवम् ॥२७॥ गुणास्तासां मया ख्यातास्तस्य पुष्पस्य मानद ॥ सृ[illegible] पारिजातस्य कश्य
पेन महात्मना ॥ २८ ॥ अदित्या कश्यपो दत्तः पुण्यार्थं च यथा मम ॥ पुष्पदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ॥२९॥ त्वं च दत्तो यथा
शच्या देवाश्चान्ये सुरेश्वर ॥ निष्क्रयश्च यथा दत्तः कश्यपाद्यैर्महर्षिभिः ॥ ३० ॥ तच्छ्रुत्वा तस्य पत्न्येका सत्यभामेति विश्रुता ॥ पुण्यकार्य
मनश्चक्रे दयिता ते यवीयसः ॥ ३१ ॥ तया चाभ्यर्थितो भर्ता देव देव्या गणेश्वरः ॥ प्रतिजज्ञे स धर्मार्थं यवीयांस्तव मानद ॥ ३२ ॥

कार्यम् ॥ २१ ॥ २२ ॥ चिरस्य चिरेण ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥२७॥ तासां कृष्णपत्नीनां पुरः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ भजासनमित्यनेन वृतलाचित्रजेवैतासवचनं नारद उक्तवानिति गम्यते ॥ ३८ ॥ ३९ ॥ ४०॥४१॥४२॥४३॥४४॥
॥ ४५ ॥ भवर्तामि भवेँ॥४६॥ ४७॥४८॥ ४९ ॥ ५०॥ ५१ ॥ त्रिदिवस्थ सन् त्वमपीति सम्य न त्वमनिस्य इत्यर्थ ॥ ५२ ॥ आमिषमोज्यानां मांसभक्षी

ततो मामुक्तवान्वीरो विष्णुर्बलवतां वर ॥ यथावत्सुरमुख्येश ब्रुवत शृणु भावत ॥३३॥ लालनीयो यवीयांस्तु प्रणिपत्याच्युतोऽब्रवीत् ॥ आ
नयेयं सुरश्रेष्ठ पारिजात वरद्रुमम् ॥३४॥ मनोरथोऽस्तु सफलो वध्वास्तेऽसुरसूदन ॥ धर्मकृत्ये विशेषेण वध्वास्ते सुरसत्तम ॥ ३५॥ अथ दर्शि
तकल्याणो लोको लोकगणेश्वर ॥ पश्यन्त्वमरकल्याणं मत्प्रभावाच्च मानवाः ॥ ३६ ॥ वैशम्पायन उवाच ॥ वासुदेववच श्रुत्वा महेन्द्रः कुल
नन्दन ॥ नारद वदतां श्रेष्ठमिद वाक्यमथाब्रवीत् ॥ ३७ ॥ भजासन द्विजश्रेष्ठ युक्तमुक्त त्वया द्विज ॥ सदेश प्रतिदास्यामि विष्णोरतुलतेजस
॥ ३८॥ आसीने नारदे शक्रो लब्धानुज्ञोऽथ नारदात् ॥ स्वमासन ततो भेजे तस्यैव सदृशं प्रभो ॥ ३९ ॥ उपविष्ट सुरपतिरथोवाच तपोध
नम् ॥ निरीक्ष्य स्वबल वीर्यं दर्पद वृत्रनाशन ॥ ४० ॥ शक्र उवाच ॥ मदर्थे कुशल पृष्ट्वा वक्तव्यस्ते जनार्दन ॥ वचनान्मम धर्मज्ञ सर्वभूतसु
साव्ह ॥ ४१ ॥ मदनन्तरमीशस्त्वं जगतो नात्र सशयः ॥ त्वदीयः पारिजातश्च रत्नान्यन्यानि चाच्युत ॥ ४२ ॥ त्व तु भूरावतरण कर्तुं देव
महीं गत ॥ मानुष्य सर्ववृत्तानां स्थितः कार्यस्य सिद्धये ॥ ४३ ॥ त्वयि तीर्णप्रतिज्ञे हि पुन प्राप्ते त्रिविष्टपम् ॥ पूरयिष्यामि वध्वास्ते इष्टा
न्कामानधोक्षज ॥ ४४ ॥ स्वर्गीयानि च रत्नानि न नेतव्यानि केशव ॥ स्वल्पार्थे मानुष लोकमिति पूर्वकृता स्थिति ॥ ४५ ॥ उत्क्रम्य हि
स्थितिं दैवीं प्रवर्तामि महाबल ॥ यद्यहं किं प्रवक्ष्यन्ति प्रजापतिगणाः प्रभो ॥ ४६ ॥ ब्रह्मणा सह पुत्रेण सपौत्रेण महात्मना ॥ नियमा सर्व
कृत्यानां स्थापिता जगतो ध्रुवा ॥ ४७ ॥ प्रजापतिकृत मार्गमपास्य व्रजतो मम ॥ श्रुत्वा प्रजापतिर्धीमाञ्छापमप्युत्सृजेत्प्रभु ॥ ४८ ॥ अ
स्माभिर्भिद्यमाने हि मर्यादासेतुबन्धनम् ॥ भेत्स्यन्त्यशङ्किता दैत्या दैत्यपक्षास्तथाऽपरे ॥ ४९ ॥ स्त्रीनिमित्तमितो नीते पारिजाते द्रुमेश्वरे ॥
स्वर्गौकसो भविष्यन्ति विमनस्काश्च मानद ॥५०॥ उपभोगा मनुष्याणां विहिता ये स्वयभुवा ॥ तैस्तु तुष्यतु मे भ्राता सपश्यन्कालपर्ययम्
॥ ५१ ॥ इहापि तात त्रिदिवे मम य स्यात्परिग्रह ॥ त्रिदिवस्थोऽपि त कृष्णः सर्वं भोक्तुमिहार्हति ॥ ५२ ॥ दृष्टो ह्यामिषभोज्यानामभिमा
नाज्जनार्दनः ॥ ततो धर्मं समुत्सृज्य पापमेवानुवर्तते ॥५३ ॥

ह्य पुष्ट भत एव तस्मात्धर्ममतिक्रामति । यदाहापस्तम्ब । " दृष्टो दृप्यति दृप्तो धर्ममतिक्रामति" इति ॥ ५३ ॥

॥ ५४ ॥ मानुपे लोके ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७॥ईतयः अतिवृष्ट्यादयः॥६८॥
न क्षमं न योग्यम् ॥ ६९ ॥ कार्यकर्म कार्यं कर्तव्यम् ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायामेकोनसप्ततितमोऽध्यायः ॥६९॥ ७ ॥

स्त्रीवश्यता ख्याप्यमाना कृष्णस्य हि महात्मनः ॥ जगत्ययशसा योगं जनयेदिति मे मतिः ॥५४॥ मानुष्यं मानुषे प्राप्तो यदेतन्मधुसूदनः॥ कु
र्यान्निर्बन्धनीयं यद्भ्रात्रा ज्येष्ठेन नारद ॥५५॥ स्वर्ग्यरत्नविलोपेन धर्षणा स्यान्ममानघ ॥ ज्ञातितो धर्षणा चैव विशेषेणैव गर्हिता ॥५६॥ धर्म
मर्थं च कामं च क्रमेण मधुसूदनः॥ सेवत्वेप सतां धर्मान्स्थापितान्पद्मयोनिना॥५७॥ महीतलं पारिजातमर्पयिष्याम्यहं यदि ॥ पौलोमीमादितः
कृत्वा को तु मां बहु मंस्यते ॥५८॥ पारिजातं महीपृष्ठे दृष्ट्वा पृष्ट्वा च मानुपाः ॥ स्वर्गार्थं नोद्यमिष्यन्ति दृष्ट्वा स्वर्गफलं क्षितौ ॥ ५९ ॥ पारि
जातगुणान्मर्त्या जुपन्ति यदि नारद ॥ देवतानां मनुष्याणां न विशेपो भविष्यति ॥६०॥ तत्र यत्क्रियते कर्म इह तद्भुज्यते नरैः॥ स्वर्गार्थं न
यतिष्यन्ति पारिजातगुणान्विताः ॥ ६१ ॥ सर्वरत्नवरः स्वर्गे पारिजातस्तपोधन ॥ तुल्यं देवसमैर्मर्त्यैः सर्वदैव जगद्भवेत् ॥६२ ॥ यज्ञैर्मर्त्या न
यक्ष्यन्ति लब्धस्वर्गफला भुवि ॥ न पूर्तानि प्रदास्यन्ति तुल्यत्वममरैर्गताः॥६३॥ यज्ञैर्जप्याह्निकैश्चैव नित्यमाप्याययन्ति नः॥ मानुषाः स्वर्गमि
च्छन्तः श्रद्दधानास्तपोधन ॥६४॥ तत्सर्वं न करिष्यन्ति पारिजातगुणान्विताः ॥ निस्तेजसो भविष्याम ते गतास्तद्विहीनताम् ॥ ६५ ॥ इतः
सुवृष्ट्या सस्यैस्ते जीवन्ति पुरुपा भुवि ॥ आप्याययन्तस्तेऽप्यस्मान्दानैर्यज्ञैस्तथैव च॥ ६६ ॥ न बुभुक्षा पिपासा वा बाधते यदि मानुषान् ॥
रोगो जरा वा मृत्युर्वा धर्मज्ञरतिरेव च ॥६७॥दौर्गन्ध्यं वा सुघोरा वा ईतयः कर्मसंभवाः ॥ किमुद्योगं करिष्यन्ति पारिजातगुणान्विताः ॥६८॥
सर्वथा नयनं तत्र पारिजातस्य न क्षमम् ॥ इति वाच्यस्त्वया विप्र विष्णुराक्लिष्टकर्मकृत्॥६९॥ यथा यथा च मे भ्राता तुष्य[illegible] [illegible]द्विचारयन्॥तथा
तथा त्वया कार्यं कार्यं मत्प्रीतिमिच्छता ॥७०॥ हाराश्च मणयश्चैव चन्दनान्यगुरूणि च॥वस्त्राणि च विचित्राणि वध्वा[illegible] [illegible]रकां नय ॥७१॥
योग्यानि यानि मर्त्यानां यावदिच्छति केशवः ॥ न स्वर्गपरिमोषं तु कर्तुमर्हति साम्प्रतम्॥७२॥ ददामि रत्नानि यथे[illegible] [illegible]ान्यहं बहूनि चित्राणि
विभूपणानि च॥ न पारिजातं च कथंचन द्रुमं मुने प्रदास्यामि दिवौकसां प्रियम्॥७३॥इति श्री०खिलेषु हरि०विष्णु०पारिजा०इन्द्रवाक्यं नामै
कोनसप्ततितमोऽध्यायः॥६९॥ वैशम्पायन उवाच ॥ देवराजवचः श्रुत्वा नारदः कुरुनन्दन ॥ प्रोवाच वाक्यं वाक्यज्ञो धर्मात्मा धर्मवित्तमः॥१॥

अथास्मिन्सप्ततितमे प्रतिज्ञां नारदेरिताम् ॥ कृष्णस्य बलभिच्छ्रुत्वा न दास्यामीत्यवावदीत् ॥ १ ॥ देवराजेति ॥ १ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ भजासनमित्यनेन पूर्वस्याचिष्टमेवैवाक्यवचनं नारद उक्तवानिति गम्यते ॥ ३८ ॥ ३९ ॥ ४०॥४१॥४२॥४३॥४४॥
॥ ८१ ॥ प्रवर्तामि प्रवर्ते॥४६॥ ४७॥४८॥ ४९ ॥ ५०॥ ५१ ॥ त्रिदिवस्थ सन् त्वमपीति संबन्ध न त्वधनिस्थ इत्यर्थ ॥ ५२ ॥ आमिषभोज्यानां मांसभक्षैः

ततो मामुक्तवान्वीरो विष्णुर्बलवतां वर ॥ यथावत्सुरमुख्येश प्रयत शृणु भारत ॥३३॥ लालनीयो यवीयांस्तु प्रणिपत्याच्युतोऽब्रवीत् ॥ आनयेयं सुरश्रेष्ठ पारिजात परद्रुमम् ॥३४॥ मनोरथोऽस्तु सफलो वध्वास्तेऽसुरसूदन ॥ धर्मकृत्ये विशेषेण वध्वास्ते सुरसत्तम ॥ ३५॥ अय दर्शितकल्याणो लोको लोकगणेश्वर ॥ पश्यन्त्वमरकल्याणं मत्प्रभावाच्च मानवा ॥ ३६ ॥ वैशम्पायन उवाच ॥ वासुदेववच श्रुत्वा महेन्द्रः कुलनन्दन ॥ नारद वदतां श्रेष्ठमिद वाक्यमथाब्रवीत् ॥ ३७ ॥ भजासन द्विजश्रेष्ठ युक्तमुक्त त्वया द्विज ॥ सदेश प्रतिदास्यामि विष्णोरतुलतेजस ॥ ३८॥ आसीने नारदे शक्रो ल धानुज्ञोऽथ नारदात् ॥ स्वमासन ततो भेजे तस्यैव सदृश प्रभो ॥ ३९ ॥ उपविष्ट सुरपतिरथोवाच तपोधनम् ॥ निरीक्ष्य स्वबल वीर्य दर्पद वृत्रनाशन ॥ ४० ॥ शक्र उवाच ॥ महर्षे कुशल पृष्ट्वा वक्तव्यस्ते जनार्दन ॥ वचनान्मम धर्मज्ञ सर्वभूतसुखावह ॥ ४१ ॥ मदनन्तरमीशस्त्वं जगतो नात्र संशयः ॥ त्वदीय पारिजातश्च रत्नान्यन्यानि चाच्युत ॥ ४२ ॥ त्व तु भारावतरण कर्तुं देव महीं गत ॥ मानुष्य सर्ववृत्तानां स्थित कार्यस्य सिद्धये ॥ ४३ ॥ त्वयि तीर्णप्रतिज्ञे हि पुन प्राप्ते त्रिविष्टपम् ॥ पूरयिष्यामि वध्वास्ते इष्टान्कामानधोक्षज ॥ ४४ ॥ स्वर्गीयानि च रत्नानि न नेतव्यानि केशव ॥ स्वल्पार्थे मानुष लोकमिति पूर्वकृता स्थिति ॥ ४५ ॥ उत्क्रम्य हि स्थितिं देवीं प्रवर्तामि महाबल ॥ यदह किं प्रवक्ष्यन्ति प्रजापतिगणा प्रभो ॥ ४६ ॥ ब्रह्मणा सह पुत्रेण सपौत्रेण महात्मना ॥ नियमाः सर्वकृत्यानां स्थापिता जगतो ध्रुवा ॥ ४७ ॥ प्रजापतिकृत मार्गमपास्य व्रजतो मम ॥ श्रुत्वा प्रजापतिर्धीमाञ्छापमप्युत्सृजेत्प्रभु ॥ ४८ ॥ असमाभिर्भिद्यमान हि मर्यादासेतुबन्धनम् ॥ भेत्स्यन्त्यशङ्किता दैत्या दैत्यपक्षास्तथाऽपरे ॥ ४९ ॥ स्त्रीनिमित्तमितो नीते पारिजाते द्रुमेश्वरे ॥ स्वर्गौकसो भविष्यन्ति विमनस्काश्च मानद ॥ ५० ॥ उपभोगा मनुष्याणां विहिता ये स्वयभुवा ॥ तेस्तु तुष्यतु मे भ्राता सपश्यन्कालपर्ययम् ॥ ५१ ॥ इहापि तात त्रिदिवे मम य स्यात्परिग्रह ॥ त्रिदिवस्थोऽपि त कृष्णः सर्व भोक्तुमिहार्हति ॥ ५२ ॥ दृष्टो ह्यामिषभोज्यानामभिमानाज्जनार्दन ॥ ततो धर्मं समुत्सृज्य पापमेवानुवर्तते ॥५३ ॥

इष्ट पुरु भत एव रत्त्वाद्धर्ममतिक्रमति । यदापस्तम्बः । " दृष्टो दृप्यति दृप्तो धर्ममतिक्रामति" इति ॥ ५३ ॥

॥ २६ ॥ आहार्यः संभोज्यः संपाद्यो वा ॥ २७ ॥ २८ ॥ धनुर्ज्यायामिति शतपथोक्त इतिहासोऽवगमितः ॥ ३० ॥ ३१ ॥ ३२ ॥३३॥ ऐन्द्रमेवाधिपत्यं श्रा
वणभाद्रपदपूज्यत्वं वैष्णवं कृत्वाऽहं ददौ दत्तवान्वैचित्र्येणात्र परोक्षता ॥ ३४ ॥ अन्यत्र समरेऽहमग्रतः प्रहरामि यतो राजा प्रभुः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८॥परिभा

पुत्रदारसहस्रैर्हि भ्राताऽनघ विशिष्यते ॥ सद्वृत्तो ज्ञानसंपन्न इति ब्रह्मा पुराऽब्रवीत् ॥२६॥ नास्ति भ्रातृसमो बन्धुराहार्य इतरो जनः ॥ इति मामब्रवीन्माता पिता चैव प्रजापतिः ॥२७॥ सोदरे तु विशेषं तु पिता मे कश्यपोऽब्रवीत् ॥ हता मया विरुद्धयन्ते दानवाः पापनिश्चयाः ॥२८॥ काममेतन्न वक्तव्यं स्वयमात्मस्तवान्वितम् ॥ प्राप्तस्त्ववसरो विप्र यदिहाद्योच्यते मया ॥२९॥ धनुर्ज्यायां मुनिश्रेष्ठ छिन्नायां हि पुराऽनघ ॥ धन्वीभिरमराणां च वरदानान्महामुने ॥३०॥उत्कृत्तशिरसो विष्णोः पुरा देहो धृतो मया॥संधिते च शिरो यत्नाच्छिन्नं रौद्रेण तेजसा॥३१॥अहं विशिष्टो देवानामित्युक्त्वा पुनरच्युतः॥ धनुरारोप्य दर्पेण स्थितो नारद केशवः ॥३२॥ किं मां पिता वा माता वा वक्ष्यतीति मया मुने ॥ स्नेहेन च स्थितं विष्णोः शरीरं मुनिसत्तम ॥ ३३ ॥ ऐन्द्रं वैष्णवमस्यैव मुने भागमहं ददौ ॥ यवीयांसमहं प्रेम्णा कृष्णं पश्यामि नारद ॥३४॥ संग्रामेषु प्रहर्तव्यं तेन पूर्वं तपोधन ॥ राजा किलाहं समरे प्रहराम्यग्रतो ध्रुवम् ॥ ३५ ॥ प्रादुर्भावेषु सर्वेषु स्वशरीरमिवानघ ॥ यतो रक्षामि धर्मज्ञ केशवं भक्तिमाश्रितम् ॥ ३६॥ इदं भङ्क्त्वा मदीयं च भवनं विष्णुना कृतम् ॥ उपर्युपरि लोकानामधिकं भुवनं मुने ॥३७॥ अवमानः स च मया पृष्ठतः क्रियते मुने ॥ लालनीयो मया बाल इत्येवं भ्रातृगौरवात् ॥३८॥ बालोऽयं मम पुत्रेति यवीयानिति नारद ॥ पित्रा मात्रा च गोविन्दो मानी च परिभाषितः ॥३९॥ इष्टस्तत्र जनानां च केशवः सुविशेषतः ॥ वयं द्वेष्या न संदेहस्तत्र स्नेहोऽतिरिच्यते ॥ ४० ॥ सर्वज्ञो बलवाञ्छूरः पात्रं मानयिता तथा॥केशवेत्येव च ध्यानं यत्ताद्वितथतां गतम् ॥४१॥ गच्छ नारद वक्तव्यः केशवो वचनान्मम ॥ आहूतो न निवर्तेयं [illegible] प्रति शत्रुभिः ॥४२॥यदीच्छसि तदागच्छ सह्यं ते यत्त्वमिच्छसि ॥ प्रहरस्व च पूर्वं त्वं भार्याजित यथेच्छसि ॥४३॥ रथाङ्गेनाथ शार्ङ्गे[illegible]ण्या नन्दकेन च ॥ प्रहरारुह्य गरुडं दृढो भूत्वा जनार्दन ॥४४॥ प्रहृते प्रहरिष्यामि यथाशक्त्या च केशव ॥ अहो धिग्यदि मां स्नेहो वि[illegible] न करिष्यति ॥४५॥ यावन्न संग्रामगतो जितोऽहं चक्रपाणिना ॥ पारिजातं न दास्यामि तावद्ब्रो मुनिसत्तम ॥ ४६ ॥ मां समाह्वयते ज्येष्ठं यवीयान्स तपोधन ॥ अहं तं मर्षयिष्यामि किमर्थं स्त्रीजितं हरिम् ॥४७॥ अद्यैव गच्छ भगवन्द्वारकां कृष्णपालिताम्॥विवादे संस्थितः सोऽज्ञ इति वाच्यस्त्वयाऽच्युतः॥४८॥

पितः आक्रुष्टः॥ ३९॥४०॥ केशवेत्येवेति संविरावः ॥४१॥४२॥ सह्यं सोढव्यम् ॥ ४३ ॥ रथाङ्गेन चक्रेण । नन्दकेन खड्गेन॥ ४४ ॥ ४५ ॥ ४६॥४७॥४८॥

॥ २ ॥ ३ ॥ इत्य महीतल पारिजातमित्यादिना पूर्वाश्च । न चावगतवान् नाङ्गीकृतवान् ॥ ४ ॥ ५ ॥ ६ ॥७॥८॥९॥१०॥११॥१२ ॥ १३ ॥ १४ ॥

अवश्यमेव वक्तव्य इति वलनिषूदन ॥ मया तव महावाहो बहुमानोऽस्ति मे त्वयि ॥ २ ॥ उक्तो मया वासुदेवो जानता भवतो मतम् ॥ न दत्त पारिजातोऽय हरस्यापि त्वया पुरा ॥३॥ हेतवश्च मया तस्य दर्शितास्ते समासत ॥ न चावगतवान्देव सत्यमेतद्ब्रवीमि ते ॥ ४॥ उपेन्द्रोऽह म हेन्द्रेण लालनीय मयेति माम् ॥उवाच पुण्डरीकाक्षो दत्तमुत्तरमेव च ॥५॥ पुन पुनर्मया वाऽस्य हेतवो देव दर्शिता ॥ ततो न बुद्धिर्व्यावृत्ता वृत्र नाशन तस्य वै॥६॥अपि चाप्युक्तवान्देवो वाक्यान्ते मधुसूदन ॥प्रत्याह पुरुषश्रेष्ठ सरोषमिव वासव॥७॥न देवगन्धर्वगणा न राक्षसा न चासुरा नैव न पन्नगोत्तमा ॥ मम प्रतिज्ञामपहन्तुमुद्यता मुने समर्था खलु भद्रमस्तु ते ॥८॥स पारिजात यदि न प्रदास्यति प्रयाच्यमानो भवता पुरदर॥ तत शचीयामृदितानुलेपने गदां विमोक्ष्यामि पुरदरोरसि॥९॥उपेन्द्रस्य महेन्द्राय भ्रातुस्ते निश्चय पर ॥ यदत्र मन्यसे न्याय्य सप्रधार्य कुरुष्व तत् ॥ १० ॥ तत्त्व हित च देवेश श्रूयतां वदतो मम ॥नयन पारिजातस्य द्वारकां मम रोचते ॥ ११ ॥नारदेनैवमुक्तस्तु सुव्यक्त वलदेहभित् ॥ रोषा निष्ट सहसा सोऽब्रवीदेतन्नराधिप ॥ १२ ॥ अनागसि मयि ज्येष्ठे सोदरे यदि केशव ॥ एव प्रवृत्त किं शक्य कर्तुमत्र तपोधन ॥१३॥ बहूनि प्रतिलोमानि पुरा स कृतवान्मयि॥ कृष्णो नारद सोढानि भ्रातेति स्म मया सदा ॥ १४ ॥ खाण्डवे चार्जुनरथ पुरा वाहयता सता ॥ मदीया वा रिता मेघा शमयन्तोऽग्निमुद्धतम् ॥१५॥ गोवर्द्धन धारयता विप्रिय च कृत मम ॥ तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया ॥१६॥ समोऽहमि ति सर्वेषां भूतानामिति चोक्तवान् ॥ स्ववाहुबलमाश्रित्य वृत्रश्च निहतो मया ॥ १७ ॥ देवासुरेषु प्राप्तेषु सग्रामेषु च नारद ॥ युध्यत्यात्मेच्छया कृष्णो मुने सुविदित तव॥१८॥ बहुनात्र किमुक्तेन तस्मादिष्टया प्रवर्ततताम्॥ ज्ञातिभेदो न न कार्य साक्षी त्व मम नारद॥१९॥ ममोरसि गदां मोक्तुमुद्यतो यदि केशव ॥ अनुशब्दयाथ पौलोमीं गुण क इह दृश्यते ॥ २० ॥ उदवासगतो धीमान्पिता नः कश्यप प्रभु ॥ अदित्या सह मे माता तयोर्वाक्यमिद भवेत् ॥२१॥ अजितात्मा मम भ्राता रजसा तमसा वृत ॥ कामेन च स्त्रियो वाक्यादेव मामुक्तवान्गुरुम् ॥ २२ ॥ धि क्स्त्रिय सर्वथा विप्र धिग्राजसमतिं तथा ॥ यत्राधिक्षिप्तवान्विष्णुरेव मां स्त्रीजितो द्विज ॥ २३ ॥ न दृष्ट कश्यपकुले व्यपदेश्य महामुने ॥ नैव दक्षकुले दृष्ट मातुर्मे यत्र सभव ॥ २४ ॥ न ज्येष्ठता न राजत्व देवानां प्रतिमानितम् ॥ कामरागाभिभूतेन कृष्णेन खलु नारद ॥ २५ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ज्ञातिभेद भ्रातृकलह नोऽस्माभि ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ व्यपदेश्य वाच्यम् ॥ २४ ॥ २५ ॥

सर्वस्य धीमतः चेतना अव्यक्तस्य अव्याकृतस्य व्यक्तो भागः कार्यं हिरण्यगर्भादिः यः सर्वभवोद्भवः सर्वसंसारबीजं तस्यात्मा अन्तर्यामी चेतयिता । न केवलं तस्यैव अपि सर्वस्य धीमतः चेतनावतः जन्तुमात्रस्येत्यर्थः ॥ १४ ॥ रुद्रादप्ययमनन्य इत्याह—प्रकृत्या इति ॥ प्रकृत्याः चिच्छक्तेः प्रथमो मुख्योऽशः व्यक्तः दृश्यमात्राकारः विश्वश्रीसंज्ञः कृत्स्नभोग्यवस्तुसंज्ञ इत्यर्थः । अत एव लोकश्चेतनस्तस्य भावनः संतर्पयिता ॥ १५ ॥ तस्याः प्रकृतेः प्रथमो गुण उमावत् गुणी उमया रुक्मिण्या वा उपहितो गुणी महेश्वरः रुद्रो विष्णुर्वा ॥१६॥ तदेवाह—नेति अर्द्धेन॥ गुणिनो मायाविनो रुद्रस्य विष्णोर्वा विशेषो भेदको गुणो नास्ति। अतो विष्णुना द्रावितं त्वां रुद्रोऽपि न रक्षिष्यतीति भावः।गुणिना इति

तस्याव्यक्तस्य यो व्यक्तो भागः सर्वभवोद्भवः ॥ तस्याऽऽत्मा परमो देवो विष्णुः सर्वस्य धीमतः ॥ १४ ॥ प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी ॥ व्यक्तः सर्वमयो विश्वश्रीसंज्ञो लोकभावनः ॥ १५ ॥ रुक्मिण्याद्याः स्त्रियस्तस्या व्यक्तत्व प्रथमो गुणः ॥ अव्यया प्रकृतिर्देवी गुणी देवो महेश्वरः ॥ १६॥ न विशेषोऽस्य रुद्रस्य विष्णोश्चामरसत्तम ॥ गुणिनश्चाव्ययः शास्ता सदा च प्रथमो गुणः ॥१७॥ नारायणो महातेजाः सर्वकृल्लोकभावनः ॥ भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः ॥ १८॥ ब्रह्मा देवगणाश्चान्ये पश्चात्सृष्टा महात्मना ॥ महादेवेन देवेश प्रजापतिगणास्तथा ॥ १९ ॥ एवं पुराणपुरुषो विष्णुर्देवेषु पठ्यते ॥ अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा ॥ २० ॥ अदित्या तपसा विष्णुर्महात्माराधितः पुरा ॥ वरेण च्छन्दिता तेन परितुष्टेन चादितिः ॥ २१ ॥ तयोक्तस्त्वत्समं पुत्रमिच्छामीति सुरोत्तम ॥ प्रणिपत्य च विज्ञाय नारायणमधोक्षजम् ॥ २२ ॥ तेनोक्तं भुवने नास्ति मत्समः पुरुषोऽपरः ॥ अंशेन तु भविष्यामि पुत्रः खल्वहमेव ते ॥ २३ ॥ स जातः सर्वकृद्देवो भ्राता तव सुरेश्वर ॥ नारायणो महातेजा यमुपेन्द्रं प्रचक्षते ॥ २४ ॥ इच्छन्नेव हरिर्देव काश्यपत्वमुपागतः ॥ तैस्तैर्भावैर्विकुरुते भूतभव्यभवाप्ययः ॥ २५ ॥ प्रादुर्भावं गतो देवो जगतो हितकाम्यया ॥ माथुरं जगतो नाथः कर्ता हर्ता च केशवः ॥२६॥ यथा पललपिण्ड[illegible]द्व्याप्तः स्नेहेन मानद ॥ तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना ॥ २७ ॥

सार्द्धश्लोकद्वयं वाक्यम् । किं च तस्य गुणिनोऽपि यः शास्[illegible]व्ययोऽपरिणामी प्रथमोऽध्यस्तात्पूर्वत्वादधिष्ठानस्य यतः अगुणो यः स एव नारायणः। एतेन तुर्यमूर्तिर्नारायण इति दर्शितम् । सा च ब्रह्मविष्णुरुद्राख्य एकैकगुणोपाधि। याऽन्या सर्वगुणोपाधिमयी तेनैव यो भोक्ता रुद्रः कर्त्ता विष्णुः ब्रह्मा च बुद्ध्यभिमानी देवाश्च इन्द्रियाभिमानिनस्ते सर्वे सृष्टा इति योजना॥ १७॥ १८॥ १९॥ २०॥ छन्दिता अनुगृहीता॥ २१॥ तयेति पञ्चानां तात्पर्यम् । त्वद्भ्रातृत्वान्न तवायं साधारणोऽपि तु अकर्मजनितो देवभावोऽस्यास्ति । त्वं तु कर्मदेवत्वात्ततो निकृष्टोऽसीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ भूतस्य भव्यस्य च भवाप्यय उत्पत्तिप्रलयस्थानं सर्वजगदुपादानभूत इत्यर्थः ॥२५॥ य एवंभूतः स एव साक्षात्कृष्ण इत्याह—प्रादुर्भावमिति॥ २६ ॥ पललपिण्डः मांसपिण्डः ॥ २७॥

पल्लाशपत्राधमिति ॥ त्वया अजित पारिजातस्य पलाश पत्रमात्र पत्रार्धं वा न प्रदास्यति वृक्षस्य का वार्तेत्यर्थ ॥ ४९ ॥ जिघवां कुन्लिवाम् ॥ ५० ॥ इति श्रीहरिवंशे विष्णुपर्वणि श्रीरामो मनवितमोऽध्याय ॥ ७० ॥ ॥ छ ॥ अथैकसप्ततितमेऽध्याये शक्रविनिश्चयम् ॥ सनिष्पं हरेरंकु नारदो द्वारकां गत ॥ १ ॥ महेन्द्रेति ॥ १ ॥ ॥ २ ॥ अनियुक्तपुरोभाग अनाहूत सन पुरोवर्ती न भवेत् तन्निश्चितम् ॥ ३ ॥ तथापि यतः भवानपि कार्याकार्ये मां पृच्छति ततोऽहम् अननुपृष्टोऽपि तुभ्यं हित वदा

पल्लाशपत्रार्द्धमपि त्वयाऽजितो न पारिजातस्य तव प्रदास्यति ॥ इति प्रवाच्यो मधुसूदनस्त्वया वचो मदीय स्मरता तपोधन ॥ ४९ ॥ पुन प्रवाच्यो भगवस्त्वयाऽच्युतो मम प्रियार्थ खलु निर्विशङ्कितम् ॥ न मायया हर्तुमिहार्हसि द्रुम सुयुद्धमेवास्तु धिगस्तु जिह्मताम् ॥ ५० ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे इन्द्रवाक्य नाम सप्ततितमोऽध्याय ॥ ७० ॥ ॥ छ ॥ ॥ वैशम्पायन उवाच ॥ महेन्द्रवचन श्रुत्वा नारदो वदतां वर ॥ विविक्ते देवराजानमिद वचनमब्रवीत् ॥ १ ॥ काम प्रियाणि राजानो वक्तव्या नात्र सशय ॥ प्राप्तकाल तु वक्तव्य हितमप्रियमप्युत ॥ २ ॥ अनियुक्तपुरोभागो न स्यादिति वदन्ति हि ॥ सुलोकगतितत्त्वज्ञो नयविज्ञानकोविद ॥ ३ ॥ कार्याकार्ये समुत्पन्ने परिपृच्छति मां भवान् ॥ यतस्तात प्रवक्ष्यामि गृह्यतां यदि रोचते ॥ ४ ॥ अनुक्तेनापि सुहृदा वक्तव्य जानता हितम् ॥ न्याय्य च प्राप्त काल च पराभवमनिच्छता ॥ ५ ॥ वक्तव्य सर्वथा सद्भिरप्रिय चापि यद्धितम् ॥ आनृण्यमेतत्स्नेहस्य सद्भिरेवाहृत पुरा ॥ ६ ॥ अनृते धर्मभङ्गे च न शुश्रूषति चाप्रिये ॥ न प्रिय न हित वाच्य सद्भिरेवेति निन्दिता ॥ ७ ॥ सर्वथा देव वक्तव्य श्रूयतां शृण्वतां वर ॥ श्रुत्वा च कुरु सर्वज्ञ मम श्रेयस्कर वचः ॥ ८ ॥ अन्योन्यभेदो भ्रातृणां सुहृदां वा बलान्तक ॥ भवत्यानन्दकृद्देव द्विषतां नात्र सशय ॥ ९ ॥ हितानुबन्धसहित कार्यं ज्ञेय सुरेश्वर ॥ विपरीत च तच्छ्रद्धा नित्य बुद्धिमतां वर ॥ १० ॥ यत्स्यात्तापकर पश्चादारब्ध कार्यमीदृशम् ॥ आरम्भेनैव तद्विद्वानेष बुद्धिमतां नय ॥ ११ ॥ विपाकमस्य कार्यस्य नानुपश्यामि शोभनम् ॥ यदत्र कारणं देव निबोध विबुधाधिप ॥ १२ ॥ य एको विश्वमध्यास्ते प्रधान जगतो हरि ॥ प्रकृत्या यं पर सर्वे क्षेत्रज्ञ वे विदुर्बुधा ॥ १३ ॥

मीत्यर्थः ॥ ४ ॥ ५ ॥ अप्रियम् अतिकटुकमपि हित परिणामसुखम् ॥ ६ ॥ अनृत इति ॥ त्वय्यनृतत्वाभावात्त्वां प्रति वदामीत्यर्थ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ विपाक फलम् ॥ १२ ॥ विश्वं कार्यं प्रधान कारण च अध्यास्ते अधितिष्ठति रथमिव यन्ता । प्रकृत्या मायया तत्क्षेत्रं कारणसूक्ष्मस्थूलदेहास्य प्रकाशयतीति क्षेत्रज्ञत्वम् ॥ १३ ॥

सर्वस्य धीमतः चेतना
अव्यक्तस्य अव्याकृतस्य व्यक्तो भागः कार्यं हिरण्यगर्भादिः यः सर्वभवोद्भवः सर्वसंसारबीजं तस्यात्मा अन्तर्यामी चेतयिता । न केवलं तस्यैव अपि ... सर्वस्य धीमतः चेतनावतः जन्तुमात्रस्येत्यर्थः ॥ १४ ॥ रुद्रादप्ययमनन्य इत्याह—प्रकृत्या इति ॥ प्रकृत्याः चिच्छक्तेः प्रथमो मुख्योऽशः व्यक्तः दृश्यमात्राकारः विश्वश्रीसंज्ञः कृत्स्नभोग्यवस्तुसंज्ञ इत्यर्थः । अत एव लोकश्चेतनस्तस्य भावनः संतर्पयिता ॥ १५ ॥ तस्याः प्रकृतेः प्रथमो गुण उमावत् गुणी उमया रुक्मिण्या वा उपहितो गुणी महेश्वरः रुद्रो विष्णुर्वा ॥ १६ ॥ तदेवाह—नेति अर्द्धेन॥ गुणिनो मायाविनो रुद्रस्य विष्णोर्वा विशेषो भेदको गुणो नास्ति। अतो विष्णुना द्रावितं त्वां रुद्रोऽपि न रक्षिष्यतीति भावः।गुणिना इति

तस्याव्यक्तस्य यो व्यक्तो भागः सर्वभवोद्भवः ॥ तस्याऽऽत्मा परमो देवो विष्णुः सर्वस्य धीमतः ॥ १४ ॥ प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी ॥ व्यक्तः सर्वमयो विश्वश्रीसंज्ञो लोकभावनः ॥ १५ ॥ रुक्मिण्याद्याः स्त्रियस्तस्या व्यक्तत्व प्रथमो गुणः ॥ अव्यया प्रकृतिर्देवी गुणी देवो महेश्वरः ॥ १६॥ न विशेषोऽस्य रुद्रस्य विष्णोश्चामरसत्तम ॥ गुणिनश्चाव्ययः शास्ता सदा च प्रथमो गुणः ॥१७॥ नारायणो महातेजाः सर्वकृल्लोकभावनः ॥ भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः ॥ १८॥ ब्रह्मा देवगणाश्चान्ये पश्चात्सृष्टा महात्मना ॥ महादेवेन देवेश प्रजापतिगणास्तथा ॥ १९ ॥ एवं पुराणपुरुषो विष्णुर्देवेषु पठ्यते ॥ अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा ॥ २० ॥ अदित्या तपसा विष्णुर्महात्माराधितः पुरा ॥ वरेण च्छन्दिता तेन परितुष्टेन चादितिः ॥ २१ ॥ तयोक्तस्त्वत्समं पुत्रमिच्छामीति सुरोत्तम ॥ प्रणिपत्य च विज्ञाय नारायणमधोक्षजम् ॥ २२ ॥ तेनोक्तं भुवने नास्ति मत्समः पुरुषोऽपरः ॥ अंशेन तु भविष्यामि पुत्रः खल्वहमेव ते ॥ २३ ॥ स जातः सर्वकृद्देवो भ्राता तव सुरेश्वर ॥ नारायणो महातेजा यमुपेन्द्रं प्रचक्षते ॥ २४ ॥ इच्छन्नेव हरिर्द्रेव काश्यपत्वमुपागतः ॥ तैस्तैर्भावैर्विकुरुते ...भव्यभवाप्ययः ॥ २५ ॥ प्रादुर्भावं गतो देवो जगतो हितकाम्यया ॥ माथुरं जगतो नाथः कर्ता हर्ता च केशवः ॥२६॥ यथा पललपि... ...द्व्याप्तः स्नेहेन मानद ॥ तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना ॥ २७ ॥

सार्द्धश्लोकद्वयं वाक्यम् । किं च तस्य गुणिनोऽपि यः शा... ...व्ययोऽपरिणामी प्रथमोऽस्य स्तात्पूर्वत्वादधिष्ठानस्य यतः अगुणो यः स एव नारायणः। एतेन तुर्यमूर्तिर्नारायण इति दर्शितम् । सा च ब्रह्मविष्णुरुद्रेभ्य एकैकगुणोपाधिभ्योऽन्या सर्वगुणोपाधिमयी तेनैव यो भोक्ता रुद्रः कर्त्ता विष्णुः ब्रह्मा च बुद्ध्यभिमानी देवाश्च इन्द्रियाभिमानिनस्ते सर्वे सृष्टा इति योजना॥ १७॥ १८॥ १९॥ २०॥ छन्दिता अनुगृहीता॥ २१॥ तयेति पश्चानां तात्पर्यम् । त्वद्भ्रातृत्वान्न तवायं साधारणोऽपि तु अकर्मजनितो देवभावोऽस्यास्ति । त्वं तु कर्मदेवत्वात्ततो निकृष्टोऽसीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ भूतस्य भव्यस्य च भवाप्यय उत्पत्तिप्रलयस्थानं सर्वजगदुपादानभूत इत्यर्थः ॥२५॥ य एवंभूतः स एव साक्षात्कृष्ण इत्याह—प्रादुर्भावमिति॥ २६ ॥ पललपिण्डः मांसपिण्डः ॥ २७॥

महात्मा ध्यग्निमग्निदहेन्द्रियापाकारस्तैस्तैर्भावैस्तत्तद्भावैर्विकुर्वति विकारं प्राप्नोति । सर्वंशोऽहं त्वं स्यक्षमित्याद्यभिमानवान् भवतीत्यर्थः । वस्तुतस्त्वविगुणो गुणातीत ॥२८॥
॥ २९ ॥ अनन्त शेष धारणार्थं भुव इति शेष ॥३०॥ श्वेत इति ॥ अत्र "कलि शयानो भवति सजिहानस्तु द्वापरः । उत्तिष्ठंस्त्रेता भवति कृतं सपद्यते चरन् ॥" इति श्रुते
योऽतिपानिशयी शेतेऽतिमूढः स पुमान्कलिः । तदनुग्रहार्थे अस्मिन् ईश्वरः कृष्ण कृष्णावतारपी भवति । य किंचित् भेपोदर्शी अर्धभग्नः स द्वापरः । त प्रति पीतवर्णो
हिरण्मय मनोहरो भवति । स किंचिद्भक्त्युन्मुखो भवतीत्यर्थः । यस्तु श्रेयार्थे यतते स त्रेता । तदनुग्रहार्थे रक्तोऽनुरक्तो मातृवद्भवति । यस्तु युधिष्ठिरादिवदत्यन्त भक्तस्त

ब्रह्मण्यदेवः सर्वात्मा तैस्तैर्भावैर्विकुर्वति ॥ जगत्यतिगुणो देवो वैकुण्ठः सर्वभावन ॥२८॥ अत समस्तदेवानां पूज्य एव च केशवः ॥ पद्मना
भश्च भगवान्प्रजासर्गकरो विभु ॥ २९ ॥ अनन्तो धारणार्थं च बिभर्ति च महद्यश ॥ यज्ञ इत्यपि सद्भिश्च कथ्यते वेदवादिभि ॥ ३० ॥ श्वेत
कृतयुगे देवो रक्तस्त्रेतायुगे तथा ॥ द्वापरे च तथा पीत कृष्ण कलियुगे विभु ॥ ३१ ॥ अवधीत्स हिरण्याक्ष दिव्यरूपधरो हरि ॥ दधाराप्सु
निमज्जन्तीमेष देवो वसुन्धराम् ॥३२॥ वाराह वपुराश्रित्य जगतो हितकाम्यया ॥ जघ्ने हिरण्यकशिपु नारसिंहवपुर्हरि ॥३३॥ जिगाय जगतीं
नव विष्णुर्वामनरूपधृक् ॥ बबन्ध च बलिं देव श्रीमान्पन्नगबन्धने ॥ ३४ ॥ देवदानवसभूतामाक्रामयदपि श्रियम् ॥ त्वय्यनन्त पुरा विष्णुरु
दारोऽमितविक्रम ॥ ३५ ॥ सावशेष तपो यस्य तन्निहन्ति जनार्दन ॥ अलिकेष्वपि वर्तन्त व्रतमेतन्महात्मन ॥३६॥ जघ्ने च दानवान्मुख्या
न्देवानां ये च शत्रव ॥ तव प्रियार्थं गोविन्दो धर्मनित्य सतां गति ॥३७॥ रामत्वमपि चावाप्य जघ्ने रावणमात्मवान् ॥ भूत्वा कामगुणांश्चैव
जघान द्विरद हरि ॥ ३८ ॥ हिताय जगतोऽद्यापि लोके वसति मानुषे ॥ उपेन्द्रो जगतां नाथ सर्वभूतोत्तमोत्तम ॥३९॥ जटी कृष्णाजिनी
दण्डी दृष्टपूर्वा मया हरि ॥ दैतेयेषु चरन्देवस्तृणेष्वग्निरिवोद्धतः ॥४०॥ अप्राक्षमपि गोविन्द दानवैकार्णव जगत् ॥ कुर्वाण दानवैर्हीन जगतो
हितकाम्यया ॥ ४१ ॥ अवश्यं पारिजात ते नयिष्यति जनार्दन ॥ द्वारकाममरश्रेष्ठ नानृत च ब्रवीम्यहम् ॥ ४२ ॥ भ्रातृस्नेहाभिभूतस्त्व न
कृष्णे प्रहरिष्यसि ॥ नापि कृष्णस्त्वयि ज्येष्ठे प्रहरिष्यति वासव ॥ ४३ ॥

छ्व त प्रति शुक्ल । स्वीय शुद्धभेष
त्व प्रकाशयतीति । यथाश्रुतव्याख्यान तु सर्वेषु युगेषु सर्वेषां रूपाणां सत्त्वात्र युज्यत इति दिक् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ देवानां दानवानां च यत्सभूतां साधा
रणीमपि श्रिय त्वयि तन्निमित्तम् आक्रामयत् आक्रान्तवान ॥ ३५ ॥ अलीकेषु मायासु वर्तमानमपि हन्त्येवेत्यर्थः ॥ ३६ ॥ ३७ ॥ भूत्वा आविर्भूय तेष्ववतारेषु
कामगुणाभ्यर्थेन शौर्यादिगुणयुक्तानसुरान्हरिर्द्विरद सिंहो गजानिव जघान । द्विरदमित्येकत्वमार्षं लुप्तोपमा च ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥४६॥४७ ॥ ४८ ॥ वृद्धानां वृद्धवाक्यानाम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ पुरातने वामनावतारे किं नारब्धं नाङ्गीकृतमपि त्वारब्धमेव ॥५३॥
॥ ५४ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ छ ॥ द्विसप्ततितमेऽध्याये ज्ञात्वेन्द्रस्य विचेष्टितम् ॥ कश्यपो रुद्रमस्तौपीत्सोम

नैव चेच्छ्रोष्यति प्रोक्तं मया देव कथंचन ॥ पृच्छ त्वं नयधर्मज्ञान्ये हितास्तव मन्त्रिणः ॥४४॥ वैशम्पायन उवाच ॥ नारदेनैवमुक्तस्तु महेन्द्रो
जनमेजय ॥ इदमुत्तरमीशोऽथ प्रत्युवाच जगद्गुरुम् ॥ ४५ ॥ एवंविधप्रभावं त्वं कृष्णं वदसि यद्द्विज ॥ एवमेतत्सुबहुशः श्रुतं खलु मया मुने
॥ ४६ ॥ यतश्चैवंविधः कृष्णस्ततोऽहं तस्य वै तरुम् ॥ न प्रदास्यामि दातव्यं सतां धर्ममनुस्मरन् ॥ ४७ ॥ महाप्रभावो नाल्पार्थे रुष्येदिति
विचिन्तयन् ॥ व्यवस्थितोऽहं भद्रं ते मुने सर्वगुणादिति ॥ ४८ ॥ महाप्रभावाः सततं भवन्ति हि सहिष्णवः ॥ श्रोतारश्चैव सततं वृद्धानां ज्ञान
चक्षुषाम् ॥४९॥ महात्मा कारणे नाल्पे कृष्णो धर्मभृतां वरः ॥ भ्रात्रा ज्येष्ठेन सर्वज्ञो विरोधं गन्तुमर्हति ॥५०॥ यथैव मम मातुः स वरं प्रादा
दधोक्षजः ॥ तथैव तस्याः पुत्राणां ज्येष्ठानां सोढुमर्हति ॥ ५१ ॥ यथैवोपेन्द्रतां यातः स्वयमिच्छञ्जनार्दनः ॥ तथैव भ्रातुरिन्द्रस्य सन्मानं
कर्तुमर्हति ॥ ५२ ॥ ज्यैष्ठ्यमेतेन देवेन नारब्धं किं पुरातने ॥ अथेदानीमपीच्छेत्स ज्येष्ठोऽस्तु मधुसूदनः ॥ ५३ ॥ सुनिश्चितं बलरिपुमीक्ष्य
नारदो विसर्जितस्त्रिदशवरेण धर्मभृत् ॥ ययौ पुरीं यदुवृषभाभिरक्षितां कुशस्थलीं धृतिमतिमांस्तपोधनः ॥ ५४ ॥ इति श्रीमहाभारते खिलेषु
हरिवंशे विष्णुपर्वणि पारिजातहरणे नारदस्य स्वर्गात्पुनरागमनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ छ ॥ ॥ वैशम्पायन उवाच ॥
अथैत्य द्वारकां रम्यां नारदो मुनिसत्तमः ॥ ददर्श पुरुषश्रेष्ठं नारायणमरिन्दमम् ॥ १॥ स्ववेश्मनि सुखासीनं सहितं सत्यभामया ॥ विराजमानं
वपुषा सर्वतेजोऽतिगामिना ॥ २ ॥ तमेवार्थं महात्मानं चिन्तयन्तं दृढव्रतम् ॥ केवलं योजयन्तं च वाक्यमात्रेण भाविनीम् ॥ ३॥ दृष्ट्वैव नारदं
देवः प्रत्युत्थाय अधोक्षजः ॥ पूजयामास च तथा विधिदृष्टेन कर्मणा ॥ ४ ॥ सुखोपविष्टं विश्रान्तं प्रहस्य मधुसूदनः ॥ वृत्तान्तं परिपप्रच्छ
पारिजाततरुं प्रति ॥ ५ ॥ अथाचष्ट मुनिः सर्वं विस्तरेण तपोधनः ॥ इन्द्रानुजायेन्द्रवाक्यं निखिलं जनमेजय ॥ ६ ॥ श्रुत्वा कृष्णस्तु तत्सर्वं
नारदं वाक्यमब्रवीत् ॥ अमरावतीं पुरीं यास्ये श्वोऽहं धर्मभृतां वर ॥ ७॥ इत्युक्त्वा नारदेनैव सहितः सागरं ययौ ॥ संदिदेश ततस्तत्र विविक्तो
नारदं हरिः ॥ ८ ॥ महेन्द्रभवनं गत्वा अद्य ब्रूहि तपोधन ॥ अभिवाद्य महात्मानं मद्वाक्यममरोत्तमम् ॥ ९ ॥

इत्यभिधीयते ॥ १ ॥ अथैत्येति ॥ १ ॥ २ ॥ योजयन्तं भाविनीं सत्यभामाम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

॥ १० ॥ ११ ॥ १२ ॥ अहो स्वदारस्थ कृत्य मिमिति कृत्यनिन्दया कृत्यकर्त्तमेव निन्दतीति ज्ञयो रुप च ॥ १३ ॥ अनास्थात्वा अपृष्ट्वा आर्यो त्वमभावः । मम
मां प्रति ॥ १४ ॥ १५ ॥ तावत पराजयम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सतीम् आत्मचक्षुर्वा देवशर्मणो गौतमगोत्रस्य भार्याम् अहल्याम् इच्छत
अन्यायेन कामयानस्य शतक्रतोरुपरि एव दोष पराभवरूपः मुने अपध्यानज मानुष भावमगण्यतस्तव मानुषाद्भय महद्भविष्यतीति मुनेरपध्यान तस्म ॥ २२ ॥ यद्यप्या

न युद्धे प्रमुखे शक्र स्थातुमर्हसि मे प्रभो ॥ पारिजातस्य नयने निश्चित त्वमवेहि माम् ॥ १० ॥ एवमुक्तस्तु कृष्णेन नारदस्त्रिदिव गत ॥ आच
चक्षेऽथ कृष्णोक्त देवेन्द्रस्यामितौजस ॥ ११ ॥ ततो बृहस्पते शक्र शशंस बलनाशन ॥ श्रुत्वा बृहस्पतिर्देवमुवाच कुरुनन्दन ॥ १२ ॥ अहो
विम्बज्ञसदनं मयि याते शतक्रतो ॥ दुर्नीतमिदमारब्धमत्र भेदो हि दारुण ॥ १३ ॥ अनास्थात्वा कथ नाम भवता भुवनेश्वर ॥ ममैतत्कृत्य
मारब्ध देव केनापि हेतुना ॥ १४ ॥ अथवा भवितव्येन कर्मजेन प्रयुज्यते ॥ जगत्कृत्स्न विविधं न शक्यमानिवर्तितुम् ॥ १५ ॥ सहसैव तु कार्या
णामारम्भो न प्रशस्यते ॥ तदेतत्सहसारब्धं कार्यं वास्यति लाघवम् ॥ १६ ॥ बृहस्पतिं महात्मानं महेन्द्रस्त्वब्रवीद्वचः ॥ एव गतेऽद्य यत्कार्यं
तद्भवान्वक्तुमर्हति ॥ १७ ॥ तमुवाचाथ धर्मात्मा गतानागततत्त्ववित् ॥ अधोमुखश्चिन्तयित्वा बृहस्पतिरुदारधी ॥ १८ ॥ यतस्व सह पुत्रेण योध
यस्व जनार्दनम् ॥ तथा शक्र करिष्यामि यथा न्याम्य भविष्यति ॥ १९ ॥ बृहस्पतिस्त्वेवमुक्त्वा क्षीरोद सागर गत ॥ आचष्ट मुनये सर्व
कश्यपाय महात्मने ॥ २० ॥ तच्छ्रुत्वा कश्यप क्रुद्धो बृहस्पतिमभाषत ॥ अवश्य भाव्यमेतद्धो सर्वथा नात्र सशय ॥ २१ ॥ इच्छत सदृशीं
भार्यां महर्षेर्देवशर्मण ॥ अपध्यानकृतो दोष पतत्येष शतक्रतो ॥ २२ ॥ तस्य दोषस्य शान्त्यर्थमारब्धश्च मुने मया ॥ उदवास स दोषश्च
प्राप्त एव सुदारुण ॥ २३ ॥ तत्रमिष्यामि मध्येऽस्य सहादित्या तपोधन ॥ उभौ तौ वारयिष्यामि देवं सवदते यदि ॥ २४ ॥ बृहस्पतिस्तु
धर्मात्मा मारीचमिदमब्रवीत् ॥ प्राप्तकालं त्वया तत्र भवितव्य तपोधन ॥ २५ ॥ तथेति कश्यपश्चोक्त्वा सम्प्रस्थाप्य बृहस्पतिम् ॥ जगामार्चयितु
देवं रुद्र भूतगणेश्वरम् ॥ २६ ॥ तत्र सौम्य महात्मानमानर्च वृषभध्वजम् ॥ वरार्थी कश्यपो धीमानदित्या सहित प्रभु ॥ २७ ॥ तुष्टाव च
तमीशान मारीच कश्यपस्तदा ॥ वेदोक्तै स्वकृतैश्चैव स्तवै स्तुत्य जगद्गुरुम् ॥ २८ ॥

रुप यद्यपि भाव एवेत्यप्याह्य योग्यम् ॥ २३ ॥ अस्य विरोधस्य मध्ये गमिष्यामि मध्यस्थो भूत्वा वारयिष्यामीत्यर्थ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ वेदोक्तैः
स्वकृतैः स्वकृतिभिः ॥ २८ ॥

तानेवाह—उरुक्रममित्यादिना द्वात्रिंशद्भिः श्लोकैः ॥ उरुक्रममिति विष्णोर्विशेषणम् उरुर्महान् त्रैलोक्याक्रमणसमर्थः क्रमः पादविक्षेपो यस्य स इति योगात् । न चैतद्वा मनस्येव रुद्रे विष्णावभेदमन्तरेण संगच्छते । अभेदश्च तयोर्बिम्बप्रतिबिम्बभावेन वा शास्त्रदृष्ट्या चेतयन्यदेतत् । एकस्यैव विश्वेश्वरस्य सर्वाणि नामानीत्येव तत्त्वम् । विश्वं कर्मकृतिसाध्यं यस्येति कुलालवन्निमित्तत्वमुक्तम् । जगत्स्रष्टारमिति कालादिसाधारणकारणरूपत्वम् । धर्मदृश्यं पुण्यप्राप्यं वरेशमनुग्राहकं कर्मकर्तॄणाम् । समित्युपसर्गस्य नमस्ये इत्यनेन संबन्धः । संनमस्ये इत्यर्थः । वेदे व्यवहिताश्चेति धातूपसर्गयोर्व्यवहितत्वस्मरणात् । सर्वं सर्वात्मकम् । धृतिमद्धाम धृतिः सात्त्विकी । "धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः। योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥" इत्येवंलक्षणा। तद्वतां धाम स्वप्रकाशचैतन्यरूपमधिष्ठानं योगिनां निलयमित्यर्थः॥२९॥ "आपः पुरुषवचसो भवन्ति" इति श्रुतेरपां कार्यं शरीरमपि उपाधिः स सर्वो यस्य गर्भे प्रतिबिम्बचैतन्यरूपं धारयित्र्यः दधति आपो गर्भे इति पाठेऽपि धारयित्र्यः । आपोऽपि यस्य

कश्यप उवाच ॥ उरुक्रमं विश्वकर्माणमीशं जगत्स्रष्टारं धर्मदृश्यं वरेशम् ॥ स सर्वं त्वां धृतिमद्धाम दिव्यं विश्वेश्वरं भगवन्तं नमस्ये ॥ २९ ॥
यो देवानामधिपः पापहर्ता तं तं विश्वं येन जगन्मयत्वात् ॥ आपो गर्भं यस्य शुभां धारित्र्यो विश्वेश्वरं तं शरणं प्रपद्ये ॥३०॥ शालावृकान्यो य
तिरूपो निजघ्ने दत्तानिन्द्रेण प्रणुदो हितानाम् ॥ विरूपाक्षं सुदर्शनं पुण्ययोनिं विश्वेश्वरं शरणं यामि मूर्ध्ना ॥ ३१ ॥ भुङ्क्ते य एको विभुर्जगतो
विश्वमग्र्यं धाम्नां धाम सुकृतित्वान्न धृष्यः ॥ पुष्यात्स मां महसा शाश्वतेन सोमपानां मरीचिपानां वरिष्ठः ॥ ३२ ॥ अथर्वाणं सुशिरसं भूतयो[न]
कृतिनं वीरं दानवानां च बाधम् ॥ यज्ञे हुतं यज्ञियं संस्कृतं वै विश्वेश्वरं शरणं यामि देवम् ॥ ३३ ॥ जगज्जालं विततं यत्र विश्वं विश्वात्म[न]ं
प्रीतिदेवं गतानाम् ॥ य ऊर्ध्वगं रथमास्थाय याति विश्वेश्वरः सुमना मेऽस्तु नित्यम् ॥ ३४ ॥ गर्भः संकल्पोत्थस्तरङ्ग इत्यर्थः ॥ ३० ॥ शालेति ॥

"अरुन्मुखान्यतीन् शालावृकेभ्यः प्रयच्छम्" इति श्रुतेः । वेदान्तविचारहीनमजितेन्द्रियं यतिमिन्द्रः शालावृकैर्भक्षयति तानिन्द्रियशालावृका[न्य]तिरूपो जितेन्द्रियः स निजघ्ने हतवान् । हितानां शमदमादिरूपाणां मित्राणां प्रणुदः प्रणोदनपरान् अभिभावकान् । यामि शरणं मूर्ध्ना च प्रपद्ये नमस्करोमि ॥३[१॥] एको जगतो विभुः स्वामी अग्र्यं ज्येष्ठं विश्वं शुद्धान् जनान् भुङ्क्ते भुनक्ति पालयति । अग्र्यं सूक्ष्ममपि विश्वं भुङ्क्ते संहरति वा । धाम्नां चक्षुःसूर्यादीनां धाम प्रकाश[कं सु]कृतित्वात् । "तस्मात्तत्सुकृतमुच्यते" इति श्रुतेः । सुकृतशब्दितब्रह्मरूपत्वात् न धृष्यः अभयरूप इत्यर्थः । पुष्यात् पोषयेत् । सोमपानां कर्मठानां मरीचिपानां चन्द्ररश्मिपानमात्रेण वर्तयतां महामुनीनां वरिष्ठः स्वर्गब्रह्मलोकादिस्थानप्रद इत्यर्थः॥ ३२॥ अथर्वाणमथर्ववेदप्रतिपाद्यं सुशिरसं शिरः पञ्चकोशेति । भूतयोनिं जगत्कारणं बाधं बाधकम्॥ ३३॥ यत्राधिष्ठाने जगज्जालं जगदिन्द्रजालं विततं विश्वं कृत्स्नं गतानां शरणं प्राप्तानां प्रीतिदेवं सुखप्रकाशकं यत् यः ऊर्ध्वगमन्तरिक्षचरं रथं वाहनमास्थाय याति संचरति। सुमनाः सुखकरः ॥ ३४॥

आनृशंस्यात् दयालुत्वात् साम मैत्री जुष्टं सेवितं जुष्यान्नयतु ॥ ४२ ॥ ब्रह्मा चतुर्मुखः भुवनोत्तमोत्तमं सत्यलोकम् असृजत् । यतः ब्राह्मणः ब्रह्मवित् अत एव षड्गुणस्यः षड्भिर्गुणैः ऐश्वर्यज्ञानयशःश्रीवैराग्यधर्मैस्तृप्तः पूर्णः । पूर्णत्वादेव व्याहृतिस्थं रसं प्रणवं तदर्थभूतं कृत्स्नं प्रपञ्चं सृष्ट्वा इह प्रपञ्चे आयातप्रविष्टः । अरिहा कामादिरिपुघ्न अङ्गैः " सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभोर्विभुज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥" इति पुराणोक्तैर्बहुरूपः ॥४३॥ व्यञ्जनः अतीन्द्रियाणामपीन्द्रियादीनामर्थानां ज्ञापकः । अजनो अजन्मा । समग्रः दृग्दृश्यात्मा । स्पृशिः विषयस्पृक् । शंभुः तत्स्पर्शजसुखभोक्ता । प्राणदः जीवनकृत् । ध्रुवो रसः परमानन्दः । पवमानस्य वायोर्भर्ता प्राणपतिः सपत्नीशः पत्नीशाभ्यां सहितः यज्ञादिकृत् । शंकरस्तत्फलकरः । सारस्य बोधस्य च धाता जनयिता ॥४४॥ त्र्यम्बकं त्रिनेत्रं वो युष्माकं विप्राणां ज्ञानिनाम् ॥४५॥ आस्यम् अग्निरूपेण । त्रिवृत्स्तोमं त्रिवृदादयः स्तोमाः स्तोत्राणि यस्मिंस्तं सोमगागम् । वृक्षहं संसारवृक्षघ्नम् । कर्मसाक्ष्यं कर्मसाक्षिणम् ।

ब्रह्मासृजद्यो भुवनोत्तमोत्तमं तृप्तो विद्वान्ब्राह्मणः षड्गुणस्य ॥ सृष्ट्वा रसं व्याहृतिस्थं समग्रं समायादिह बहुरूपोऽरिहाङ्गैः ॥४३॥ व्यञ्जनोऽजनोऽथ विद्वान्समग्रः स्पृशिः शम्भुः प्राणदः कृत्तिवासाः ॥ रसो ध्रुवः पवमानस्य भर्ता सपत्नीशः शंकरः सारधाता ॥४४॥ त्र्यम्बकं पुष्टिदं वो ब्रुवाणं धर्मं विप्राणां वरदं यज्वनां च ॥ वराद्वरं रणजेतारमीशं देवं देवानां शरणं यामि रुद्रम् ॥४५॥ आस्यं देवानामन्तकं दुष्कृतीनां त्रिवृत्स्तोमं वृक्षहं कर्मसाक्ष्यम् ॥ भूतायनं भूतपतिं गुणज्ञं गुणाकारं शरणं यामि रुद्रम् ॥४६॥ अनुद्धृतं यज्ञकर्तारमन्तं मध्यं चाद्यं यज्ञकृतां साम्यरूपम् ॥ वेदव्रतेषु बहुधा गीतमीशमभित्रिविष्टपं शरणं यामि रुद्रम् ॥४७॥ महाजिनं व्रतिनं मखलालं सुतोषणं क्रोधघ्नं विपापम् ॥ भूतं क्षेत्रज्ञं गुणिनं वा कपर्दिनं नतोऽस्मीशं वन्दनं वन्दनानाम् ॥४८॥ देवं देवानां पावनं पावनानां कृतिं कृतीनां महतो महान्तम् ॥ शतात्मानं संस्तुतं गोपतीनां पतिं देवं शरणं यामि रुद्रम् ॥ ४९॥ अन्तश्चरं पुरुषं गुह्यसंज्ञं प्रभास्वन्तं प्रणवं विप्रदीपम् ॥ हेतुं परं परमस्याक्षरस्य शुभं देवं गुणिनं [illegible]ऽस्मि ॥ ५०॥

भूतायनं भूतानां लयस्थानम् ॥४६॥ साम्यं प्रकृत्यवस्था वेदव्रतेषु वेदोक्तयज्ञेषु बहुधा नानादैवतरूपेण । गीतम् अभित्रिविष्टपं स्वर्गं व्याप्य [illegible]तारम् ॥४७॥ महाजिनं गजाजिनवन्तम् । मेखलालं मेखलया अलंकृतम् । सुतोषणम् अल्पायासप्रसन्नम् । भूतं नित्यसिद्धम् अत एव क्षेत्रज्ञं देहेन्द्रियाहंकारादिप्रका[illegible] । वन्दनं वन्दनीयं वन्दनानां वन्दनीयानाम् ॥४८॥ कृतिं कृतीनां यज्ञानां यज्ञं यज्ञियानामपि यष्टव्यमित्यर्थः । शतात्मानम् अनन्तमूर्तिम् । गोपतीनाम् इन्द्रियाधिष्ठातृदेवतानां संस्तुतम् अधिष्ठातृत्वेन । " चक्षुषश्चक्षुः " इत्यादिश्रुतेः ॥ ४९ ॥ प्रभास्वन्तं स्वप्रकाशम् । विप्रदीपं ज्योतिरपि सूर्यादिकं ज्योतिरन्तरेण चक्षुरादिना भास्यं भवति इदं तु न तथा विगतप्रदीपत्वात् । अक्षरस्य जीवाख्यप्रतिबिम्बस्य हेतुं बिम्बभूतम् ॥ ५० ॥

उभयोः नगन्नायो प्रसूतियोंनि न प्रसूतश्च योनिरपि न कारणातीतत्वात् । अत एव सूक्ष्मो दुर्बोध्यः । भूतेभ्य पृथक् न पृथक् एकभूतश्च पृथगिति तदधिष्ठानत्वात् एकभूत इति तदभेदाग्रहात् स्वयभूत सर्वजगदाकारेण निष्पन्न । सर्वं सीदति छीयतेऽस्मिन्निति सर्वसाद । प्रद प्रकृष्टो दाता । स्वाद रुचि आम्रादिषु माधुर्यरूपेणायमे वास्तीत्यर्थ । समदो हर्ष रत्न रमणीयम् ॥ ५१ ॥ आसन्न अन्तर्यामित्वेन निकटग । साधनानां तद्वतां तु सन्नतर अनावृत भाववृत्ति श्रद्धागृहीतमहावाक्यजा वृत्तिरह ब्रह्मास्मीति ज्ञान तस्य प्रदाता । मा माम् ईप इप्यमाणस्यार्थस्य पूरण पड्गुणानां च सर्वज्ञत्वादीनां पूरण ॥ ५२ ॥ अन्तर्बहिर्वृजिनानाम् आधिव्याध्यादीनां कामरागादीनां वा । स्वय कर्तेति निमित्तकारणत्वम् । भूताकारेण भवितु शीलमस्येति भूतभावी उपादान विकुर्वन् विकार मानुवन् क्रोधादीन् आविष्कुर्वन् । सुकृतिनां साधूनां मे मम च वृजिन प्रणुदात् ॥ ५३ ॥ उद्धताः कण्टकवत् नाशिताः । शरेण यतो दग्धा अतो वितथान्ता विफलमरणा अशस्त्रपूतत्वात् पुरदाहेन दग्धत्वादित्यर्थ ।

प्रसूतिरुभयोर्न प्रसूतश्च सूक्ष्म पृथग्भूतेभ्यो न पृथक्चैकभूत ॥ स्वय भूत पातु मां सर्वसाद प्रद स्वाद समद पातु रत्नम् ॥ ५१ ॥
आसन्न सन्नतरः साधनानां श्रद्धावतां श्राद्धवृत्तिप्रणेता ॥ पतिर्गणानां महतां सत्कृतीनां पायान्मेप पूरणः पड्गुणानाम् ॥५२॥ अन्तर्बहिर्वृजि
नानां निहन्ता स्वय कर्ता भूतभावी विकुर्वन् ॥ धृतायुध सुकृतिनामुत्तमोजा प्रणुद्यान्मे वृजिन देवदेव ॥ ५३ ॥ येनोद्धतास्ते पुरा मायिनो
वै दग्धा घोरेण वितथान्ता शरेण ॥ महत्कुर्वन्तो वृजिन देवतानां ज्यायानीश पातु विश्वोदधाता ॥५४॥ भागीयसां भागमतोऽन्तमिच्छन्मखो
दाक्षो येन कृत्तोन्वधावत ॥ विद्रान्यज्ञस्यादिरथान्त स देव पायादीशो मां दक्षयज्ञान्तहेतु ॥५५॥ अन्योऽधन्य सत्कृतश्चोत्तमश्च जगत्स्रष्टा
योऽस्ति सर्वातिगुह्य ॥ स मां मुखप्रमुखे पातु नित्य विचिन्वानः प्रथम पड्गुणानाम् ॥ ५६ ॥

ज्यायानीश इति पाठे इन्द्रस्य गौतमशापात् । विश्वस्य सर्वस्य उदस्य उदकस्य सर्वकारणस्य प्रधानस्येत्यर्थ । धाता धारक सर्वाश्रयत्वात् ॥ ५४ ॥ भागीयसाम् अति शयेन भागभाजां देवानां भागम् अन्तम् अपमानेन वध च इच्छन् । दाक्षो यज्ञलक्षण इति यज्ञपक्षे उपचारादुक्तम् । येन कृत्तोऽवच्छिन्न सन्नन्वधावत् यज्ञेश शरणम् आजगामेत्यर्थः । तत्र प्रमाणस्यमुदाहरति । विद्रानिति॥५५॥यो जगत् सृष्ट्वाऽस्ति अतिगुह्यो गोप्यो ब्रह्मरूपी ईश्वरस्ततोऽन्यो विष्णु पालनकर्ता स च धन्य महाभाग यत सत्कृतः गमादिभिरत्कारपुनोऽन्य एव उत्तमो य समोदायः स मां मुखप्रभवत्वात् "मुखादिन्द्रश्चाग्निश्च" इति श्रुतौ इन्द्राग्नी तौ प्रमुखे आदौ यस्य तस्मिन् यज्ञे नित्य चिन्वान इन्द्रं स्वाभेदेन मनन पश्यन् नारायण स मा पातु मत्मन्ततिमिन्द्र रक्षतु । यद्वा पड्गुणानामैश्वर्यादीनां प्रथमो मुख्य आश्रय इत्यर्थः । मत्समुखे इति पाठेऽग्निर्विष्णू ॥५६॥

गुणत्रैकाल्यं कार्योत्पत्तिस्थितिसंहारसमयवत्त्वं यस्य नित्यम् । प्रवाहनित्यतया उत्पत्त्यादयो यतो भवन्तीत्यर्थः । एतेन ब्रह्मकर्म उक्तम् । सत्त्वोद्रेकः सत्त्वाधिक्यं च यस्य विष्णुरूपस्य नित्यं यस्य च विष्णोर्भावात् स्वरूपात् प्रसूतः आविर्भूतः । कृष्णो गोप्तॄणामिन्द्रादीनां गोप्ता सत्त्वमयत्वात् । यश्च सन्नदः सन्नमवसानो नाशस्तत्प्रदः कालरुद्ररूपेणेत्यर्थः । विश्वस्याद्यो मातृपितृवत्पालकोऽपि बाधमानस्य जगत्पीडकस्य क्रुद्धः सन् सन्नद इत्यनुवर्तते ॥ ५७ ॥ यस्य धाम्नः तेजोजालस्य हरिर्विष्णुरग्रः अग्रमिवाग्रः सूक्ष्मोंऽशोऽथ विश्वो विराट् ब्रह्मा हिरण्यगर्भः पुत्रैः सनकाद्यैः सहितोऽन्ये च द्विजाः मरीच्यादयः संभूता इति शेषः । ते च यस्य सोमस्य उमासहितस्य भवने द्वारप्रवेशे पराभूताः सन्तः प्रवेशं न लभन्त इत्यर्थः । एष देवः सोमः जुषतु अस्मासु प्रीयताम् ॥५८॥ यस्माद्भूतानां वियदादीनां भूतिः संभवः अन्तो नाशः मध्यं स्थि[तिश्च] भवति । अतो यस्य कस्यापि पराभूतस्य नरस्य मृडवेद्यस्य मृड एव वेद्योऽन्वेष्यो यस्य शिवैकशरणस्य तत एव धृत्यादिरूपोऽनुग्रहो गुहाश्रुतिर्गुह्यवस्तुश्रवणं च भवति

गुणत्रैकाल्यं यस्य देवस्य नित्यं सत्त्वोद्रेको यस्य भावात्प्रसूतः ॥ गोप्ता गोप्तॄणां सन्नदो दुष्कृतीनामाद्यो विश्वस्य बाधमानस्य क्रुद्धः ॥५७॥
धाम्नो यस्य हरिरग्रोऽथ विश्वो ब्रह्मा पुत्रैः सहितश्च द्विजाश्च ॥ पराभूता भवने यस्य सोमो जुषत्वेष श्रेयसे साधुगोप्ता ॥ ५८ ॥ यस्माद्भूतानां भूतिरन्तोऽथ मध्यं धृतिर्भूतिर्यश्च गुहाश्रुतिश्च ॥ गृहाभिभूतस्य पुरुषेश्वरस्य महात्मनः संमृडवेद्यस्य तस्य ॥५९॥ यल्लिङ्गाङ्कं त्र्यम्बकः सर्वमीशो भगलिङ्गाङ्कं यद्वदुमा सर्वधात्री ॥ नान्यत्तृतीयं जगतीहास्ति किंचिन्महादेवात्सर्वसर्वेश्वरोऽसौ॥६०॥इति संस्तूयमानस्तु भगवान्वृषभध्वजः ॥ दर्शयामास धर्मात्मा कश्यपं धर्मधृग्वरम् ॥ ६१ ॥ उवाच चैनं देवेशः प्रसन्नेनान्तरात्मना ॥ येन संस्तौपि कार्येण त्वं तज्जाने प्रजापते ॥६२॥ इन्द्रोपेन्द्रौ महात्मानौ देवौ प्रकृतिमेष्यतः ॥ पारिजातं तु धर्मात्मा नयिष्यति जनार्दनः ॥ ६३ ॥ अपध्यातो महेन्द्रो हि मुनिना देवशर्मणः ॥ अस्याकाङ्क्षत्पुरा भार्यां तपोदीप्तस्य कश्यप ॥६४॥ गम्यतां तत्र धर्मज्ञ दाक्षायण्या सह त्वया ॥ अदित्या शक्रसदनं श्रेय[...] [...]त्रयोश्रेत्रम्॥६५॥

अत एव तस्य पुरुषेश्वरस्येति महात्मन इति च विशेषणं युज्यते । व्यसनागमे शरणीकृतो विश्वकर्ता व्यसनभङ्गं करिष्यत्येवेति भावः ॥५[...] [...]दिति ॥ यथा कार्यं सर्वं स्त्रीपुंसरूपं भगलिङ्गाङ्कम् एवं कारणमपि तस्य तदनुरूपं भगलिङ्गाङ्कं भगलिङ्गसंयोगरूपप्रतिमात्मकम् अवगन्तव्यम् । तेन यदिदं दृश्यते [...]शिवं लिङ्गं तदभिमानि चेत नोद्भवमिदं ब्रह्माण्डमित्यर्थः । अत एवासौ सर्वसर्वेश्वरः । सर्वम् अविशेषात्कृत्स्नः प्रपञ्चः "सर्वं समाप्नोपि ततोसि सर्वः" इति निर्वचनात्तदुपादानभूतो विष्णुरपि सर्वशब्दार्थः तयोरीश्वरस्तुरीयब्रह्मरूप इत्यर्थः ॥ ६० ॥ धर्मधृग्वरं धर्मभृतां श्रेष्ठम् ॥६१॥ येन कार्येण यदर्थं संस्तौपि तज्जाने । प्रजापते हे कश्यप ॥६२॥ प्रकृतिं स्वास्[...] तत्रापि धर्मात्मा हरिर्जेष्यतीत्याह । पारिजातं त्विति ॥ ६३ ॥ इन्द्रस्तु अधर्मदोषादभिभवं प्राप्स्यतीत्याशयेनाह—अपध्यात इति ॥ ६४ ॥ ६५ ॥

